**॥ श्रीगणेशायनमः ॥ अथ श्री शिव अपामार्जन स्तोत्र प्रारंभः ।**

**जैमिनिरुवाच-**

ॐ अकालमृत्युं जितवान् श्वेतो राजा कथं मुने । तां शांतिं कृपया विद्वन्यथावद्वक्तुमर्हसि ॥ १॥

**दुर्वासा उवाच :**

स राजा पापशांत्यर्थं शैवापामार्जनं सदा । पपाठ परया भक्त्या रक्षायै चात्मनो हितम् ॥ २॥

सर्वरक्षाकरं पुण्यं रक्षोघ्नं शिवमोदितम् । सदाशिवादजः प्रोक्तो ब्रह्मणो धीतवान् भृगुः ॥ ३॥

भृगोः क्रतुः ऋतोर्गर्गो गर्गाच्छ्रेतो महीपतिः । श्वेताच्च कौशिकस्तस्मादहं प्राप्तोस्मि जैमिने ॥ ४॥

शिवं शांतिकरं गुह्यं पुण्यं सर्वार्थसाधनम् । सर्वक्लेशभपव्याधिरोगदोष निवारणम् ॥ ५॥

नमस्कृत्वा महेशाय पार्वतीशाय शंभवे । मृत्युंजयाय कालाय कालांतकयमाय च ॥ ६॥

आधिव्याधिपरीतानां विभैरूपहतात्मनां । पुरुषाणां तथा स्त्रीणां भक्त्या भावितचेतसाम् ॥ ७॥

सर्व शांतिकरं गुह्यं शैवापामार्जनं पठेत् । विधिवत्प्रयतो भूत्वा कुशहस्तस्त्वनन्यधीः ॥ ८॥

त्रिपुंड्रं भस्मना कृच्वा शुचिरीशानमानसः । मार्जयेत्सर्वगात्राणि कुशाग्रैः शिवतत्परः ॥ ९ ॥

ध्यायेदवारमात्मानं पंचास्यं चंद्रमौलिनम् । रोगग्रहविषार्तानां कुर्याच्छांतिमिमां शुभाम् ॥ १०॥

**जैमिनिरुवाच :**

भगवंस्त्वामहं प्रष्टुमुत्सुकोस्मि महामुने । विधिना च कथं प्राप्तं गुह्याद्गुह्यतरं परम् ॥११॥

शैवापामार्जनं पुण्यं पठतां पापनाशनम् । देवदेवान्महेशानाद्विस्तरात्तद्ब्रवीतु मे ॥ १२॥

**दुर्वास उवाच ।**

एकदा देवताः सर्वा ऋषयश्च तपोधनाः । द्रष्टुं जग्मुः सुरेशानं देवदेवमुमापतिम् ॥ १३॥

ददृशुस्ते स्कंदनंदिमहाकालगणार्चितम् । भस्मोद्धूलितसर्वांगं नागयज्ञोपवीतिनम् ॥ १४॥

नीलकंठं विरूपाक्षं चंद्रमौलिं त्रिलोचनम् । उमयासह देवेशं जटामुकुटमंडितम् ॥ १५॥

तं दृष्ट्वा पतिताः सर्वे दंडवत्साश्रुलोचनाः । पुनर्जयजयेत्युक्त्वा सहैव च समुत्थिताः ॥ १६॥

ततो देवगणाः सर्वे मुनयश्च तपोधनाः । तुष्टुवुः परया भक्त्या शंकरं लोकशंकरम् ॥ १७॥

ऋग्यजुः सामगर्भाभिर्वाग्भिस्तु परया मुदा । रुद्राध्यायै रुद्रसूक्तैरघोरास्त्रेण जैमिने ॥ १८॥

तत्र ब्रह्मा सुखासीनं सर्वलोकपितामहः । सदाशिवं नमस्कृत्य बद्धांजलिरभाषत ॥ १९॥

**ब्रह्मोवाच ।**

'देवदेव महादेव सर्वलोकहिते रत । रहस्यं किंचिदिच्छामि प्रष्टुं त्वां परमेश्वर ॥ २०॥

भूतैर्ग्रहैश्च रोगैश्च मृत्युना विक्लवेन च । पराभिचारशापास्त्रैर्विविधैः प्राणिनः सदा ॥ २१॥

पीड्यंते दुःखिताः सर्वे महादेव जगत्प्रभो । तेषां शांतिं प्रयच्छ त्वं ग्रहव्याधिविनाशनीम् ॥ २२॥

ब्रह्मणो वचनं श्रुत्वा देवस्त्रिभुवनेश्वरः । प्राणिपीडासु निरतान् ग्रहभूतादिराक्षसान् ॥ २३॥

रोगांश्च विविधानन्यान् लताविस्फोट कादिकान् । नानावालग्रहान्दुष्टान् तथान्यान्सांनिपातिकान् ॥ २४॥
प्राणिदुःखप्रदान् क्रूरान् स्वर्भूभूतलचारिणः । आज्ञापयामास गणांस्तानानेतुं वृषध्वजः ॥ २५॥

**शंकर उवाच ।**

श्रृण्वंतु मद्गणा वाक्यं त्रैलोक्ये विचरंति ये । प्राणिपीडाकरा दुष्टा रोगग्रहनिशाचराः ॥ २६॥
लोकानां विविधं दुःखं प्रयच्छंति महाधमाः । यत्रकुत्रस्थिताः सर्वे आनेयास्ते ममांतिकम् ॥ २७॥

**दुर्वास उवाच ।**

ततः शिवगणाः सर्वे हर्षनिर्भरमानसाः । दुष्टांस्तानानयामासुत्रैलोक्यस्थान् शिवाज्ञया ॥ २८॥
बध्वा पृथक् पृथक् पापान् ग्रहान् रोगांस्तु राक्षसान् ।
पापाधिष्ठानसंरब्धान् क्रूरान्बालग्रहानपि ॥ २९॥
यथाक्रमं तु ते सर्वे दंडवत्पतिता भुवि । प्रणिपत्य महेशानं सर्वे हृष्टास्त्वदाज्ञया ॥ ३०॥
त्रैलोक्यस्थाः समानीताः प्राणिपीडाकराच ये । देवद्विजग्रहाः क्रूराः कूष्मांडा ब्रह्मराक्षसाः ॥ ३१ ॥
क्षुद्राच जृंभकाः प्रेताभूतास्कंदग्रहा अपि । महामारी तथा कृत्या पूतना गर्भघातिनी ॥ ३२॥
डाकिनी शाकिनी घोरा रेवती च पिशाचिनी । अंतरिक्षचरा याश्च योगिन्यो विविधाः श्रुताः ॥ ३३ ॥
अपस्मारमहोत्पाता वातपित्तकफोद्भवाः । ज्वरा बहुविधा रौद्रा एकद्वित्रिचतुर्थकाः॥ ३४॥
दोषोत्थाः संनिपातोत्था ज्वरा आगंतुका अपि । कुष्ठप्रमेहप्रदरा विद्रंध्यश्च ह लोमकाः ॥ ३५॥
श्वासकासक्षयच्छर्दि कर्णशूलगलामयाः । विस्फोटकृत्तिका वर्तमूत्रकृच्छ्रमलीमसाः ॥ ३६॥
पांडुहिकाललाटस्था मुखरोगाश्चदारुणाः । नेत्ररोगा बहुविधा रोगाश्चैवोपस र्गिकाः ॥ ३७॥
एते चान्ये बहुविधा व्याधयश्चाधयो ग्रहाः । प्रणतुं नैवशक्तास्ते किंपुनस्त्वां निरीक्षितुम् ॥ ३८॥
त्वत्तेजसा दुरात्मानो भूताः प्रलयतां गताः । आज्ञापय महादेव किं कुर्मोऽथ तवाज्ञया ॥ ३९॥
स तानुवाच भगवानीशः क्रोधसमन्वितः । प्राणिनां दुःखदा यूयं केन दोषेण भो ग्रहाः ॥ ४०॥
तत्सर्वं निर्भयाः संतो यथावद्वक्तुमर्हथ । ग्रहा ऊचुर्महेशानं प्रणिपत्य पुनः पुनः ॥ ४१॥
ये ग्रहास्तामसा लोके दुर्भाग्याश्चाविवेकिनः । दीर्घदुःखप्रदाः पापाः प्रायोनर्थकराश्च ये ॥ ४२ ॥
ते कर्मप्रेरिताः सर्वे पीडयंतीह देहिनां । एतावदेव कथितं नान्यदस्मात्परं प्रभो ॥ ४३॥
तदाज्ञापय देवेश किं कुर्मोतः परं परम् । स एवमुक्तो भगवान् शंकरो लोकशंकरः ॥ ४४॥
भूतसंघानुवाचेदं संनिधौ त्रिदिवौकसाम् | एतावत्कालपर्यंतं ग्रहरोगैश्चदारुणैः ॥ ४५॥
प्राणिनः पीडिताः सर्वे दुःखितास्त्रिदिवौकसः । अतः परंतु यः कश्चित्प्राणिपीडाकरो भवेत् ॥ ४६॥
सोतमेष्यति मद्दत्तशांत्या च परया ध्रुवम् । त्रिपुंड्रभस्मना कृत्वा धृत्त्वा रुद्राक्षमालिकाम् ॥ ४७॥
मदीरितामिमां शांतिं पठतो मत्परायणाः । भवद्भिस्ते जनाः सर्वे परिहार्याः सुनिश्चितम्॥ ४८॥
नोचेदुपरियुष्माकं त्रिशूलं मे पतिष्यति । अतः परं प्रवक्ष्यामि सर्वदुष्टहरीं पराम् ॥ ४९॥
साक्षाच्छिवमयीं शांतिं सर्वलोकहितावहाम् । कुर्यान्न्यासं प्रथमतो मदुक्तेनैव वर्त्मना ॥ ५०॥
शिवं न्यसेत्तु करयोः कुशासन उदङ्मुखः । महेशानं न्यसेन्मूर्ध्नि शिखायां शशिशेखरम् ॥ ५१॥

ललाटे शाश्वतं न्यस्येद्विरूपाक्षं तु नेत्रयोः । वक्रे तत्पुरुषं न्यस्य कणयोस्तु भवं न्यसेत्॥ ५२ ॥
नासिकायां न्यसेत्सर्वं भूतनाथमथोष्ठयोः । चुबुकं तु न्यसेत्स्थाणुं गंडयोस्तु वृषाकपिम् ॥ ५३ ॥
श्रीकंठं कंठदेशे तु स्कंधयोश्च महेश्वरम् । कूर्परे मणिबंधे च ज्योतिर्लिंगं भवं न्यसेत्॥ ५४ ॥
कक्षयोर्व्योमकेशं च वृषवाहं च वक्षसि । न्यसेदघोरः स्तनयोरुदरे त्रिपुरतिकम् ॥ ५५ ॥
कंदर्पमर्दनं नाभौ कट्यामथ कपर्दिनम् । लिंगे न्यसेद्वामदेवं गुदे कालांतकं न्यसेत् ॥ ५६ ॥
उवस्तु धूर्जटिं न्यस्य जान्वोस्त्रिनयनं न्यसेत् । जंघयोनीलकंठं च गुल्फयोनीललोहितम् ॥ ५७ ॥
अंगुष्ठयोन्यसेदुग्रं शंकरं चंगुलीषु च पादयोर्विन्यसेत्सर्वं कवचे तु कपालिनम् ॥ ५८ ॥
अस्त्रे पाशुपतास्त्रं च स्थाणुं वै हुंफडित्यथ । पूर्वे सदाशिवः पातु शंकरः पातु दक्षिणे ॥ ५९ ॥
त्रिनेत्रः पश्चिमे पातु शाश्वतः पातु चोत्तरे नैर्ऋते वामदेवश्च वायव्यां च परात्परः ॥ ६० ॥
ईशान्यामवतादीश आग्नेय्यां भवभंजनः । ऊर्ध्वं श्रीकंठदेवोव्यादधस्तानीललोहितः ॥ ६१ ॥
दशदिक्षु महादेवस्त्रपंचकः पातु सर्वतः । एवं न्यासविधिं कृत्वा साक्षाच्छिवमयो भवेत् ॥ ६२ ॥
तस्य पापानि सर्वाणि विनाशमुपयाति हि ।

ॐ अस्य श्रीशैवापामार्जनस्तोत्रमंत्रस्य ।
सदाशिव ऋषिः । अनुष्टुप्छंदः । श्रीसदाशिवो देवता ।
हरामुकस्य (*आपले नाव*) दुरितमिति बीजम् । अघोरास्त्रमिति शक्तिः । शंकरायेति कीलकम् ।
ज्वलक्ष्पावकलोचनेति कवचम् । मृत्युंजयमहादेवेति व्यापकम् । हुंफट् इश्यत्रम् ।
श्रीसांब सदाशिवप्रीत्यर्थं शैवापामार्जन स्तोत्र पाठ जपमहं करिष्ये ।
इतिसंकल्पः ।
ध्यानम् ।
अथ ध्यानं प्रवक्ष्यामि सर्वपापहरं शुभम् । ध्यायेच्छिवं पंचवक्रं त्रिनेत्रं कमलासनम् ॥ १ ॥
स्फटिकाद्रिनिभं देवं कुठारवरदाभयान् । दधानं सुप्रसन्नं च चंद्रार्धकृतशेखरम् ॥ २ ॥
स्तुतं समंतादमरैः प्रसादनिरतैः सदा । शैवापामार्जने चास्मिनृषिश्चाहं सदाशिवः ॥ ३ ॥
अनुष्टुपछंद इत्येते देवता श्रीमहेश्वरः । सर्वारिष्टप्रशांत्यर्थं विनियोगं प्रकल्पयेत् ॥ ४ ॥
आदौ तु रुद्रगायत्री ततो घोरास्त्रमुच्चरेत् । मृत्युंजय तेऽनुष्टुप्स्यात्पश्चात् श्लोक इतिक्रमः ॥ ५ ॥
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तं नो रुद्रः प्रचोदयात् । ऋक् ।
ॐ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः । ऋक् ।
ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् । उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् । ऋक् ।

हरामुकस्यदुरितं ज्वलच्यावकलोचन । मृत्युंजय महारुद्र विपरोगग्रहैः सह ।
नमोस्तु स्थाणुरूपाय ज्योतिर्लिंगामृतात्मने । चतुर्मूर्तिवपुच्छायाभासितांगाय शंभवे ॥ १ ॥

ॐ तत्पुरुषाय०यात् । अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजाम० तात् |
हरामुकस्य दुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विपरोगग्रहैः सह ।
महेश्वराय पार्वत्यै महाकालाय नंदिने । स्कंदाय विघ्नराजाय भूतेशाय शिवाय च ॥ २ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
क्षेत्रपालाय योगेश ध्येयाय परमात्मने । नमो विरंचिविष्ण्वीशभेदिने व्याप्य तिष्ठते ॥ ३ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
सर्गसंस्थितिसंहारव्यक्ताव्यक्तस्वरूपिणे । अप्रमेयाय देवाय वषट्स्वाहास्वधात्मने ॥ ४ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
मणिमंत्रौषधादीनां शक्तिरूपाय शंभवे । नमस्ते विश्वरूपाय रक्षोभूतविपच्छिदे ॥ ५ ॥
तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
गदागदार्तिशमिने दुःखिदीनैकपालिने । नमस्ते श्वेतरूपाय वाग्विशुद्धाय शार्ङ्गिणे ॥ ६ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
सद्योजाताय देवाय नमस्तेस्तु महोद्भव | नमो ज्येष्ठाय रुद्राय वामाय विष्णुमूर्तये ॥ ७ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
नमः कालांतचक्राय कारणाय नमो नमः । नमो बलविकर्णाय बलप्रमथनाय च ॥ ८ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
मनोन्मनाय महसे सर्वभूतमयाय ते । अघोरायाथ घोराय घोरघोरतराय च ॥ ९ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
जगद्वंद्याय देवाय सर्वलोकहिताय ते । ईशानाय नमस्तुभ्यं पशूनां पतये नमः ॥ १० ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
द्वात्रिंशदक्षरं पुण्यं चतुर्विंशत्कलात्मकम् । स्फटिकाचलवद्गौरं वंदे श्रीजगतां पतिम् ॥ ११ ॥
ॐ तत्पुरुषाय० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।

हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
सर्वव्याधिहरं रुद्रं नमस्कुर्वे वृषध्वजम् ॥ १२ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
द्वात्रिंशदक्षरो घोरत्रयोदशपदो ग्रहः अनुष्टुप् च चतुर्वाक्यो दिशं त्वेते नृणां सुखम् ॥ १३ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
सर्वशत्रुविषोन्मादतापभीतिनिवारिणे पराय पुरुरूपाय व्याधिघ्नाय नमो नमः ॥ १४ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
वेदाक्षरेण रक्ष त्वं प्राणिनां हितकाम्यया । रक्ष रक्ष महाघोरान् छिन्धि छिन्धि महाज्वरान् ॥ १५ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
छिंन्धि देहव्यथां घोरां मर्द मर्दाभिचारक । मृत्युंजय महाराज विष शोषय शोषय ॥ १६ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
स्त्रीपुंसयोर्गदानुग्रान् देवमानुपयो स्तथा । शमं नय शिवान्येषां प्रयच्छोमापते सुखम् ॥ १७ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
तत्तद्रूपं समास्थाय भंज भंज जगत्पते भंज भंज महाव्याधिं छिन्धि छिन्द्रि महाज्वरान् ॥ १८ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
नमश्चतुर्घाप्रोद्धतभूतभीतात्मने नमः । भूरिभारार्तिसंहर्त्रे भूतनाथाय शंभवे ॥ १९ ॥
ॐ तत्पुरुषाय ० यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
विश्वग्रासाय विकसकालकूटविपाशिने । तत्कलंकां कितग्रीव नीलकंठाय ते नमः ॥ २० ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
नमो देहार्धकांताय दग्धदक्षाध्वराय च । चतुर्वर्गेष्वभीष्टार्थ दायिने मायिने नमः ॥ २१ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
स्थूलाय मूलभूताय  शूलदारितविद्विषे । कालहंत्रे नमश्चंद्र खंड मंडितमौलिने ॥ २२ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।

हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
देवदैत्यसुरेद्राणां मौलिघृष्टांघ्रये नमः भस्माभ्यक्ताय भक्तानां भुक्तिमुक्ति प्रदायिने ॥ २३ ॥|
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
विवासमे कपदतभ्रांतिगांगजलाय ते । व्यक्ताव्यक्तस्वरूपाय शंकराय नमो नमः ॥ २४ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
स्मररिपवेंऽधकविद्विषे नमो
नमोनमो गिरितनयासहायिने ।
विषोक्षल्लसत्फणिकुलबन्धमूर्तये नमः
सदा ॐ वृषवरवाहनाय ते ॥ २५ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः । स मे प्रीतः सुखं दद्यात्सर्वाभयपतिर्ज्वरः ॥ २६ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
कुबेरं ते मुखं रौद्रं नंदिनानंदमावह । ज्वरं मृत्युभयं घोरं विनाशय विनाशय ॥ २७ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
वज्रहस्त महाघोर शूलहस्त महाबल । हतोसि ब्रह्मदंडेन हरं गच्छ महाज्वर ॥ २८ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
सर्वज्ञमूर्तये तुभ्यं प्रभवे ते नमो नमः । ज्वलन्पावकनेत्राय सर्वज्वरहराय च ॥ २९ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
सुप्रसन्नाय देवाय सर्वग्रहविमोचने । कल्याणं कुरु देवानां सुखमायुश्च देहि मे ॥ ३० ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।
शांतिरस्तु शिवं चास्तु सुप्रसन्नोऽस्तु शंकरः । भैरवा मरुतो दुर्गा शांतिं यच्छंतु खेचराः ॥ ३१ ॥
ॐ तत्पुरुषाय व्यात् । ॐ अघोरेभ्योथ० पेभ्यः । ॐ त्र्यंबकं यजा० तात् ।
हरामुकस्यदुरितं ज्वलत्पावकलोचन । मृत्युंजय महारुद्र विषरोगग्रहैः सह ।

शांतिं दिशंतु नः सर्वे शिवाराधनतत्पराः । गणेश्वराश्च रुद्राश्च एकादशविधा अपि ॥ ३२ ॥
आयुरारोग्यदाः संतु प्राणिनां भुवनेश्वराः । यत एवागतं पापं तत्रैव प्रतिगछतु ॥ ३३ ॥
एतद्रोगासु पीडासु जंतूनां हितमिछतम् । अपामार्जनकं शास्त्रं शिवनाम्नाभिमंत्रितम् ॥ ३४ ॥
कुर्याच्छिवाज्ञया तस्य ग्रहरोगादिनाशनम् | चंद्रमौले महादेव मृत्युंजय वृषध्वज ॥ ३५ ॥
पाहि मां प्रणतं स्वामिन्करुणाकर शंकर ।

**दुर्वासा उवाच-**

इत्येषा देवदेवेन शंकरेण स्वयंभुवे ।
उपदिष्टा पराशांतिः प्राणिपीडापहा शुभा ॥ १ ॥
देवैवमुनिभिः सर्वैः श्रुता भक्तिसमन्वितैः । गृहीता परया भत्त्या लोकानां हितकाम्यया ॥ २ ॥
यस्य स्मरणमात्रेण ग्रहव्याधिभयानि च । यक्षराक्षसवेताला भूतापस्मारखेचराः ॥ ३ ॥
डाकिनी शाकिनी कृत्या महामारी च पूतना । बालानां ये ग्रहाः केचित्पुंसांस्त्रीणां च ये ग्रहाः ॥ ४ ॥
ते सर्वे प्रपलायते गजानीकं यथा हरेः । तस्मात्सर्वप्रयत्नेन कार्या शांतिरियं शुभा ॥ ५ ॥
पश्येमां परमां विद्यां शिवरूपां तु जैमिने । अकालमृत्युं जितवान् श्वेतो राजा यया पुरा ॥ ६ ॥
सर्वज्वरादिपीडाया विद्यया जैमिनेऽनया । भक्त्या भाषितया नाशः शीघ्रं समुपजायते ॥ ७ ॥
सम्यक् शिवार्चनं कृत्वा जनाः शांति जपंति ये । श्रृण्वंति च न तेषां वै ग्रहपीडाभयं भवेत् ॥ ८ ॥
शिवां शांतिमिमां भक्त्या श्रृणुयाच्छ्रावयेत्तु यः । स प्राप्नोतीप्सितान्कामानायुरारोग्यमेव च ॥ ९ ॥
न तस्य विग्रहो घोरो यो नमस्येत्सदाशिवम् । शैवापामार्जनं भक्त्या प्रपठेच्छृणुयादपि ॥ १० ॥
स ब्रह्मा स हरिः सोर्कः स शक्रो वरुणो यमः । धनाध्यक्षः स भगवान् स चैकः सकलं जगत् ॥ ११ ॥
सुखसाध्येन तपसा सद्यस्तोषी सुतोषितः । ददाति कृत्स्नं त्रैलोक्यं त्रैलोक्यस्याधिकं च यत् ॥ १२ ॥
गुणव्रजां न शक्तास्ते यस्य वक्तुमजादयः । मन्वंतरशतेनापि तं शिवं शरणं व्रजेत् ॥ १३ ॥
कामांगदहनं शुद्धं सर्वज्ञं सर्वतोमुखम् । तमाराध्य महेशानमिह को नाप्नुयात्सुखम् ॥ १४ ॥

शिवः सर्वं शिवः सर्वं शिवः सर्वं पुनः पुनः । वचः शिवमयं ज्ञेयं वक्ता वाच्यं च तन्मयम् ॥ १५ ॥

इतिश्रीस्कंदपुराणे श्रीमन्महेश्वरोदितं ब्रह्मजैमिनिदुर्वासःसंवादे परं श्रीमदशैवापामार्जन स्तोत्रं संपूर्णम् ।
श्रीसांब सदाशिवार्पणमस्तु ।